KÂVYAMÂLÂ. 15.



# THE KÂVYÂLANKÂRA-SÛTRAS

OF

## VÂMANA

with his own Vṛitti.

EDITED

BY

MAHÂMAHOPÂDHYÂYA PAṆDIT DURGÂPRASÂDA

AND

KÂS'INÂTH PÂṆḌURANG PARAB.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Third Revised Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1926.

*Price 12 Annas.*

काव्यमाला. १५.



पण्डितवरवामनविरचितानि

# काव्यालंकारसूत्राणि ।

वृत्तिसमेतानि ।



जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च संशोधितानि,
तानि च पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा संस्कृतानि ।

तृतीयं संस्करणम् ।

तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी

इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् ।

१९२६.

मूल्यं १२ आणकाः ।

# वामनपण्डितः ।



वृत्तिसमेतकाव्यालंकारसूत्राणां प्रणेता श्रीवामनपण्डितः कदा कुत्र समुत्पन्न इति न सम्यङ्निर्णेतुं शक्यते. किं त्वयं खिस्ताब्दीयसप्तमशतकोत्तरार्धान्न प्राचीनः, यतोऽयं [1]भवभूतिप्रणीतोत्तररामचरितादिश्लोकानुदाहृतवान्. अथ च [2]ध्वन्यालोकलोचने प्रथमोद्द्योते 'वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत्' इति वदन्तः श्रीमदाचार्याभिनवगुप्तपादा ध्वन्यालोककर्तुः श्रीमदाचार्यानन्दवर्धनाद्वामनस्य प्राचीनत्वं प्रकटयन्ति. तस्मात्खिस्ताब्दीय[3]नवमशतकोत्तरार्धान्नाधस्तनो वामनः, भाति चायं काश्मीरकः अष्टमशतके कश्मीरमहीपतेर्विपश्चिद्वरस्य श्रीजयापीडस्य [4]मन्त्री कश्चन वामनाभिध आसीत्. स एवायं काव्यालंकारसूत्रप्रणेतेत्यपि केचन काश्मीरका वदन्ति. काशिकावृत्तिकारो वामनस्त्वस्माद्भिन्नः, [5]प्राचीनश्च, ध्वन्यालोकलोचन-काव्यप्रकाश-अलंकारसर्वस्वादिग्रन्थरत्नेष्वपि वामनमतं समुपन्यस्तमुपलभ्यते, अस्मिन्ग्रन्थे वृत्तौ अमरुशतक-उत्तररामचरित-कादम्बरी-किरातार्जुनीय-कुमारसंभव-मृच्छकटिक-मेघदूत-रघुवंश-विक्रमोर्वशी-वीरचरित-वेणीसंहार-शाकुन्तल-शिशुपालवध-हर्षचरितादिग्रन्थेभ्यः समुद्धृत्योदाहरणानि दत्तानि सन्ति. किं च कामन्दकीनीति-नाममाला-हरिप्रबोधानाम्, [6]विशाखिल-शूद्रक-कविराजानां च नामान्यप्यत्र समुपलभ्यन्ते. [7]महेश्वरकृता टीकाप्यस्य ग्रन्थस्य वर्तते.

अयं ग्रन्थः प्रथमं १८७५ मिते खिस्ताब्दे जर्मनीदेशे जेनाख्य (Jena)नगरे कापलर (Professor Cappeller) नाम्ना विदुषा मुद्रितः. तत्पुस्तकमस्मिन्देशे न सर्वसुलभम्. पुनः १८८३ मिते खिस्ताब्दे कलकत्तानगरे आनन्दरामबडुयाभिधेन मुद्रयित्वा वाग्भटालंकार-सरस्वतीकण्ठाभरणाभ्यां संबद्ध एव स्थापितः, मुद्रणेऽपि सूत्र-

---

१. भवभूतिः खिस्ताब्दीयसप्तमशतकोत्तरार्धे कान्यकुब्जमहीपालस्य यशोवर्मणः सभायामासीदिति सुप्रसिद्धमेव. २. काव्यमालायां मुद्रितस्य २७ पृष्ठे टीकायाम्. ३. कश्मीरेष्ववन्तिवर्मराज्यसमये नवमशतकोत्तरार्धे श्रीमदानन्दवर्धन आसीदिति राजतरङ्गिण्याः प्रतीयते. ४. 'मनोरथः शङ्खदत्तश्चटकः संधिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥' इति राजतरङ्गिणी. ५. चीनदेशात्तीर्थयात्रार्थं भारतवर्षे सप्तमशतकपूर्वार्धे कश्चन ह्वएन्-त्सङ्ग (Hiouen-Thsang) नामा पुरुषः समागतः. तदात्र वामनप्रणीतायाः पाणिनिसूत्रव्याख्यायाः (काशिकायाः) पठनपाठनेषु प्रचार आसीदिति तदीययात्रावर्णनपुस्तकात्पाश्चात्यैः पण्डितैरधिगतम्. ६. विशाखिलः कलाशास्त्रकर्ता. ७. टीका त्वस्माभिर्नोपलब्धेति मूलग्रन्थ एव प्रकटीकृतः.

वृत्त्युदाहरणानां पार्थक्यं न सम्यग्विहितमिति तत्पुस्तकं हस्तलिखितपुस्तकसमानमेव. अतो वयमस्य प्रत्नस्यात्युपयुक्तस्य ग्रन्थस्य मुद्रणे प्रवृत्ताः.[1]

तत्रास्मन्मुद्रणमूलभूतानि पुस्तकानि त्वेतानि—

क. जयपुरराजगुरुभट्टश्रीलक्ष्मीदत्तसूनुभट्टश्रीदत्तानां पुस्तकम्. प्रायः शुद्धम्. तत्पत्राणि ४०.

ख. कलकत्तामुद्रितम्.

ग. द्रविडवीरेश्वरशास्त्रिभिर्वाराणसीतः प्रहितम्. तत्तु नातिशुद्धमन्तिमाध्यायस्य त्रयस्त्रिंशन्मितसूत्रपर्यन्तमेवास्ति. तत्पत्राणि ६१.

एवं पुस्तकत्रयाधारेण मुद्रितानि सवृत्तीनि काव्यालंकारसूत्राण्येतानि प्रमोदावहानि भवन्त्वलंकारशास्त्रे प्रविविक्षूणां सच्छात्राणामिति शिवम्.

---

१. 'प्राचीनेष्वलंकारनिबन्धेषु (अस्मदवलोकितेषु) वामनवृत्तिरेवोत्कृष्टा । तस्यां हि क्वापि क्वापि स्वोक्तौ समीचीना युक्तिरुद्भाविता । (शब्दशुद्धिं विना) अप्रासङ्गिकविषयो नावर्णि, नापि च शृङ्गाररसः, यदनुषङ्गादश्लीलतादोषस्य संभवः । अत एव नास्ति तत्राश्लीलतादोषः । नापि चेयं वृत्तिरतीव विस्तृता । प्रसिद्धेषु तावदलंकारनिबन्धेषु बालानां प्रथमपाठोपयोगिनी एषैवेति मन्यामहे ।' इति स्वमुद्रितकाव्यप्रकाशोपोद्धाते न्यायरत्नश्रीयुतमहेशचन्द्रपण्डिताः.

# काव्यालंकारसूत्राणां विषयानुक्रमः ।



# काव्यमाला ।



## पण्डितवरश्रीवामनविरचितानि
## काव्यालंकारसूत्राणि ।

वृत्तिसमेतानि ।



### शारीरं नाम प्रथममधिकरणम् ।

प्रथमोऽध्यायः ।

प्रणम्य परमं[1] ज्योतिर्वामनेन कविप्रिया ।
काव्यालंकारसूत्राणां स्वेषां[2] वृत्तिर्विधीयते ॥

**काव्यं ग्राह्यमलंकारात् ॥ १ ॥**

काव्यं खलु ग्राह्यमुपादेयं भवति । अलंकारात् । काव्यशब्दोऽयं गुणालंकारसंस्कृतयोः शब्दार्थयोर्वर्तते । भक्त्या[3] तु शब्दार्थमात्रवचनोऽत्र गृह्यते ।

कोऽसावलंकार इत्यत आह—

**सौन्दर्यमलंकारः ॥ २ ॥**

अलंकृतिरलंकारः । करणव्युपत्त्या पुनरलंकारशब्दोऽयमुपमादिषु वर्तते ।

**स दोषगुणालंकारहानादानाभ्याम् ॥ ३ ॥**

स खल्वलंकारो दोषहानात्, गुणालंकारादानाच्च संपाद्यः कवेः[4] ।

**शास्त्रतस्ते[5] ॥ ४ ॥**

ते[6] दोषगुणालंकारहानादाने शास्त्रादस्मात् । शास्त्रतो हि[7] ज्ञात्वा दोषाञ्जह्यात्, गुणालंकारांश्चाददीत ।

---

१. 'परमात्मानं' क. २. 'तेषां' क. ३. 'शक्त्या' ख. लक्षणयेत्यर्थः. ४. 'कवेः' ख-पुस्तके नास्ति. ५. 'कवेः शास्त्रतस्ते च' ख. ६. 'ते चैते' ख. ७. 'हि' क-पुस्तके नास्ति.

किं पुनः फलमलंकारवता काव्येन [1]येनैतदर्थोऽयं यत्न [2]इत्याह—

**काव्यं सद्दृष्टादृष्टार्थम् । प्रीतिकीर्तिहेतुत्वात् ॥ ५ ॥**

काव्यं सच्चारु दृष्टप्रयोजनम् । प्रीतिहेतुत्वात् । अदृष्टप्रयोजनम् । कीर्तिहेतुत्वात् । अत्र [3]श्लोकाः—

'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।
अकीर्तिं[4]वर्तनीं [5]त्वेवं कुकवित्वविडम्बनाम् ॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।
अकीर्तिं [6]तु निरालोकनरकोद्देशदूतिकाम् ॥
तस्मात्कीर्तिमुपादातुमकीर्तिं [7]तु निबर्हितुम् ।
काव्यालंकारशास्त्रार्थः प्रसाद्यः कविपुंगवैः ॥

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे प्रथमोऽध्यायः ।

प्रयोजनस्थापना ।

---

द्वितीयोऽध्यायः ।

[8]अधिकारिनिरूपणार्थमाह—

**[9]अरोचकिनः सतृणाभ्यवहारिणश्च [10]कवयः ॥ १ ॥**

इह खलु द्वये कवयः संभवन्ति—अरोचकिनः, सतृणाभ्यवहारिणश्चेति । अरोचकिसतृणा[11]भ्यवहारिशब्दौ गौणार्थौ । कोऽसावर्थः—विवेकित्वमविवेकित्वं चेति ।

[12]तदाह—

**पूर्वे शिष्याः । विवेकित्वात् ॥ २ ॥**

---

१. 'येन तदर्थोऽयं' क. २. 'इत्यत आह' क. ३. 'श्लोकः' क. ४. वर्तनी मार्गः. ५. 'त्वेव' क. ६. 'च' ख. ७. 'च व्यपोहितुम्' ख. ८. 'प्रयोजनस्थापनमधिकारि-' ख. ९. 'नास्ति रोचकं रुचिकरं द्रव्यं येषां तेऽरोचकिनः । अपरिचितालंकारशास्त्रा इत्यर्थः । सतृणमभ्यवहरन्ति भुञ्जत इति सतृणाभ्यवहारिणः । दोषगुणविवेकशून्या इत्यर्थः ।' इति ख-टिप्पणम्. 'सतृणमभ्यवहरति सतृणाभ्यवहारी अविवेकी ।' इति श्रीकण्ठचरितटीका (२।२८). १०. 'कवयः' क-पुस्तके नास्ति. ११. 'भ्यवहारिणौ' ख. १२. 'यदाह' क.

पूर्वे खल्वरोचकिनः शिष्याः शासनीयाः । विवेकित्वाद्विवेचनशील-त्वात् ।

**नेतरे । तद्विपर्ययात् ॥ ३ ॥**

इतरे सतृणाभ्यवहारिणो न शिष्याः । तद्विपर्ययादविवेचनशीलत्वात् । न च शीलमपाकर्तुं शक्यम् ।

नन्वेवं न शास्त्रं सर्वा[1]नुग्राहि कुतस्तदुपादीयते तदाह—

**न शास्त्रमद्रव्येष्वर्थवत् ॥ ४ ॥**

न खलु शास्त्रमद्रव्येष्वविवेकिष्व[2]र्थवत् ।

निदर्शनमाह—

**न क[3]तकं पङ्कप्रसादनाय ॥ ५ ॥**

नहि कतकं पयस इव पङ्कस्य प्रसादनाय प्र[4]भवति ।

अधिकारिणो निरूप्य [5]रीतिविनिश्चयार्थमाह—

**रीतिरात्मा काव्यस्य ॥ ६ ॥**

रीतिर्नामेयमात्मा काव्यस्य । शरीरस्येवेति वाक्यशेषः ।

का पुनरियं रीतिरित्याह—

**[6]विशिष्टा पदरचना रीतिः ॥ ७ ॥**

विशेषवती पदानां रचना रीतिः ।

कोऽसौ विशेष इत्याह—

**विशेषो गुणात्मा ॥ ८ ॥**

वक्ष्यमाणगुणरूपो विशेषः ।

**सा त्रिधा—वै[7]दर्भी गौडीया पाञ्चाली च ॥ ९ ॥**

सा चेयं रीतिस्त्रिधा भिद्यते—वैदर्भी, गौडीया, पाञ्चाली चेति ।

---

१. ‘ऽनुग्राहि स्यात्को वा मन्यते तदाह’ क. २. प्रयोजनवदित्यर्थः. ३. कतकं जलप्रसादको ‘निर्मली’ इति प्रसिद्धः फलविशेषः. ४. ‘भवतीति’ क. ५. ‘रीतिनिश्चया’ ख. ६. ‘विशिष्टपद’ क. ७. ‘वैदर्भी गौडीया पाञ्चाली’ इति ख-पुस्तके नास्ति.

किं पुनर्देश[1]वशाद्द्रव्यवद्गुणोत्पत्तिः काव्यानाम्, येनायं देशविशेषव्यपदेशः। नैवम्[2]। यदाह—

**विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥ १० ॥**

विदर्भगौडपाञ्चालेषु देशेषु[3] तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात्त[4]त्समाख्या। न पुनर्देशैः किंचिदुपक्रियते काव्यानाम्।

तासां गुणभेदाद्भेदमाह—

**समग्रगुणा वैदर्भी ॥ ११ ॥**

समग्रैरोजःप्रसादप्रभृतिभिर्गुणैरुपेता वैदर्भी नाम रीतिः।

अत्र[5] श्लोकौ—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥'

तामेकामेवं[6] कवयः स्तुवन्ति—

सति वक्तरि सत्यर्थे सति शब्दानुशासने।
अस्ति तन्न[7] विना येन परिस्रवति वाङ्मधु ॥'

अत्रो[8]दाहरणम्—

'गाहन्तां[9] महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥'

**ओजःकान्तिमती गौडीया ॥ १२ ॥**

ओजः कान्तिश्च विद्येते[10] यस्यां सा ओजःकान्तिमती गौडीया नाम रीतिः। माधुर्यसौकुमार्ययोरभावात्। समासबहुला अत्युल्बणपदा च।

---

१. 'देशविशेषे' ख. २. 'नैव' ख. ३. 'देशेषु' क-पुस्तके नास्ति. ४. 'लब्धत्वाद्देशसमाख्या' क. ५. 'अत्र श्लोकौ' क-पुस्तके नास्ति. ६. 'अलंकारादिसौभाग्यां तामेकामेव स्तुवन्ति कवयः' ख. ७. रीत्यात्मकं वस्तु. ८. 'अत्र' क-पुस्तके नास्ति. ९. अभिज्ञानशाकुन्तले द्वितीयेऽङ्के श्लोकः. १०. 'विद्यते यस्याः सेयं' क.

अत्र श्लोकः—

'समस्तात्युत्कटपदामोजःकान्तिगुणान्विताम् ।
गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः ॥'

उदाहरणम्—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

**माधुर्यसौकुमार्योपपन्ना पाञ्चाली ॥ १३ ॥**

माधुर्येण सौकुमार्येण च गुणेनोपपन्ना पाञ्चाली नाम रीतिः । ओजःकान्त्यभावादनुल्बणपदा विच्छाया च ।

तथा च श्लोकः—

'आश्लिष्टश्लथभावां तु पुराणच्छाययाश्रिताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥'

अत्रोदाहरणम्—

'ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोत्थाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥'

एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति ।

**तासां पूर्वा ग्राह्या । गुणसाकल्यात् ॥ १४ ॥**

तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या । गुणानां साकल्यात् ।

**न पुनरितरे । स्तोकगुणत्वात् ॥ १५ ॥**

---

१. 'उद्भट' क. २. 'गुणाङ्किताम्' क. ३. 'अपि' क. ४. वीरचरिते प्रथमेऽङ्के श्लोकः. ५. 'पर्याप्त' क. ७. 'अनुल्बणश्लथविच्छाया च' क. ७. क-पुस्तके नास्ति. ८. 'तां' ख. ९. 'च्छायमाश्रितां' ख. १०. 'सुकुमारीं' ख. ११. 'यथा' क. १२. 'विवाह' क.

इतरे[1] गौडीयपाञ्चाल्यौ न ग्राह्ये । स्तोकगुणत्वात् ।

**तदारोहणार्थमितराभ्यास इत्येके ॥ १६ ॥**

तस्या वैदर्भ्या एवारोहणार्थमितरयोरपि रीत्योरभ्यास इत्येके मन्यन्ते ।

**तत्तु[2] न । अतत्त्वशीलस्य तत्त्वानिष्पत्तेः ॥ १७ ॥**

नह्यतत्त्वं शीलयतस्तत्त्वं निष्पद्यते ।

निदर्शनार्थमाह—

**न शैण[3]सूत्रवानाभ्यासे त्रसरसूत्रवान[4]वैचित्र्यलाभः ॥ १८ ॥**

नहि शैण[5]सूत्रवानमभ्यस्यन्कुविन्दस्त्रसरसूत्र[6]वानवैचित्र्यं[7] लभते ।

**सापि[8] समासाभावे शुद्धवैदर्भी ॥ १९ ॥**

सापि च वैदर्भी रीतिः शुद्धवैदर्भी भण्यते । यदि समासवत्पदं[9] न भवति ।

**तस्यामर्थगुणसंपदास्वाद्या ॥ २० ॥**

तस्यां वैदर्भ्यामर्थगुणसंपदास्वाद्या भवति ।

**तदुपारोहादर्थगुणलेशोऽपि ॥ २१ ॥**

तदुपधानतः खल्वर्थलेशोऽपि स्वदते । किमङ्ग, पुनरर्थगुणसंपत् ।

तथा चाहुः—

> 'किं त्वस्ति काचिदपरैव पदानुपूर्वी
>     यस्यां न किंचिदपि किंचिदिवावभाति ।
> आनन्दयत्यथ च कर्णपथं प्रयाता
>     चेतः सताममृतवृष्टिरिव प्रविष्टा ॥
> वचसि यमधिगम्य स्पन्दते वाचकश्री-
>     र्वितथमपि तथात्वं[10] यत्र वस्तु प्रयाति ।

---

१. क-पुस्तके इयं वृत्तिर्नास्ति. २. ख-पुस्तके 'तत्तु न' इति सूत्रबहिर्भूतम्; 'तन्न' क. ३. 'सण' क. ४. 'वाने' ख. ५. 'सण' क. ६. 'तन्तु' क. ७. 'वैचित्री' ख. ८. 'सापि च समासाभावे शुद्धवैदर्भी भण्यते । यदि समासवत्पदं न भवति तस्यां वैदर्भ्यामर्थगुणसंपत्स्वाद्या भवति । तदुपारोहादर्थगुणलेशोऽपि तदुपदानतः ॥ १९ ॥ 'खल्वर्थ–' ख. ९. 'समासवर्तिपदं' क. १०. 'यथात्वं' क.

उदयति हि स तादृक्कापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः ॥'

**सापि वैदर्भी । तात्स्थ्यात् ॥ २२ ॥**

सापीयमर्थ[1]गुणसंपद्वैदर्भी[2]त्युक्ता । तात्स्थ्यादित्युपचारतो व्यवहारं दर्शयति ।

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे द्वितीयोऽध्यायः ।
[3]अधिकारिचिन्तारीतिनिश्चयश्च ।

---

तृतीयोऽध्यायः ।

रीतितत्त्वं[4] निरूप्य काव्याङ्गान्युपदर्शयितुमाह—

**लोको विद्या प्रकीर्णं च काव्याङ्गानि ॥ १ ॥**

उद्देशक्रमेण[5]ैतद्याचष्टे—

**लोकवृत्तं लोकः ॥ २ ॥**

लोकः स्थावरजङ्गमात्मा तस्य वर्तनं वृत्तमिति ।

**शब्दस्मृत्यभिधानकोषच्छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्या[6] ॥ ३ ॥**

शब्दस्मृत्यादीनां तत्पूर्वकत्वं[7] पूर्वं काव्यबन्धेष्वपेक्षणीयत्वात् ।

तासां काव्याङ्गत्वं योजयितुमाह—

**शब्दस्मृतेः शब्दशुद्धिः ॥ ४ ॥**

शब्दस्मृतेर्व्याकरणाच्छब्दानां शुद्धिः साधुत्व[8]निश्चयः कर्तव्यः[9] । शुद्धानि हि पदानि निःशङ्कैः[10] कविभिः प्रयुज्यन्ते ।

**अभिधानकोषतः[11] पदार्थनिश्चयः ॥ ५ ॥**

पदं हि रचना[12]प्रवेशयोग्यं भावयन्संदिग्धार्थत्वेन न गृह्णीयान्न वा जह्यादिति काव्यबन्धविघ्नः । तस्मादभिधानकोषतः पदार्थनिश्चयः कर्तव्य

---

१. 'सापीयं' ख. २. 'वैदर्भी उक्ता' ख. ३. ख-पुस्तके नास्ति. ४. 'अधिकारवत्तां रीतिनिश्चयं च निरूप्य' ख. ५. 'क्रमेणैव' ख. ६. 'विद्याः' क. ७. 'तत्पूर्वत्वं काव्य' क. ८. 'साधुत्वे' क. ९. क-पुस्तके नास्ति. १०. 'निःकम्पैः' क. ११. 'कोशात्' क. १२. 'प्रयोग्यप्रवेशं' क.

इति[1] । अपूर्वाभिधानलाभार्थत्वं त्वयुक्तमभिधानकोषस्य । अप्रयुक्तस्याप्रयोज्यत्वात् । यदि प्रयुक्तं प्रयुज्यते तर्हि किमिति संदिग्धार्थत्वमाशङ्कितं पदस्य । तन्न । तत्र सा[2]मान्येनार्थावगतिः संभवति । यथा नीवीशब्देन जघनवस्त्रग्रन्थिरुच्यत इति कस्यचिन्निश्चयः । स्त्रिया वा पुरुषस्य वेति संशयो '[3]नीवी संग्रथनं नार्या जघनस्थस्य वाससः' इति नाममालाप्रतीकमपश्यत इति । अथ क[4]थं

> 'केनचित्पूर्वमुक्तोऽपि नीवीबन्धः श्लथीकृतः ।
> विचित्रभोजनाभोगवर्धमानोदरादिना ॥'

इति प्रयोगः । भ्रान्तेरु[5]पचाराद्वा ।

**छन्दोविचितेर्वृ[6]त्तसंशयच्छेदः ॥ ६ ॥**

काव्याभ्यासाद्वृत्तसंक्रान्तिर्भवत्येव । किं तु मात्रावृत्तादिषु कचित्संशयः स्यात् । अतो वृत्तसंशयच्छेदश्छ[7]न्दोविचितेर्वि[8]धेय इति ।

**कलाशास्त्रेभ्यः कलात[9]त्त्वस्य संवित् ॥ ७ ॥**

कला गीतनृत्यचित्रादिकास्तासामभिधायकानि शास्त्राणि विशाखिलादिप्रणीतानि कलाशास्त्राणि तेभ्यः कलातत्त्वस्य संवित्संवे[10]दनम् । नहि कलातत्त्वानुपलब्धौ कलावस्तु सम्यङ्निबद्धुं शक्यमिति ।

**कामशास्त्रतः कामोपचारस्य ॥ ८ ॥**

संविदित्य[11]नुवर्तते । कामोपचारस्य संवित्कामशास्त्रत इति । कामोपचारबहुलं हि[12] व[13]स्तु काव्यस्येति ।

**दण्डनीतेर्नयापनययोः ॥ ९ ॥**

दण्डनीतेरर्थशास्त्रान्नयस्यापनयस्य च [14]संविदिति । तत्र षाड्गुण्यस्य

---

१. ख-पुस्तके नास्ति. २. 'सामान्येनापि' क. ३. 'नीविराग्रन्थनं' ख. ४. 'अथ कथं केनचित् पूर्वमुक्तो नीवीबन्धः श्लथीकृत इति प्रयोगः' ख. ५. लक्षणयेत्यर्थः. 'उपमानाद्वा' क. ६. 'वृत्तं' ख. ७. 'छन्दःशास्त्रतः' क. ८. ख-पुस्तके नास्ति. ९. 'तत्त्वसंवित्' क. १०. 'संवेदना' ख. ११. 'संविदिति' तस्यानुवर्तते क. १२. क-पुस्तके नास्ति. १३. प्रतिपाद्यमित्यर्थः. १४. 'संविज्ज्ञानं' ख.

यथावत्प्रयोगो नयः । तद्विपरीतोऽपनयः । नहि तावविज्ञाय नायकप्रतिनायकयोर्वृत्तं शक्यं[1] काव्ये निबद्धुमिति ।

इतिवृत्तकुटिलत्वं च ततः[2] ॥ १० ॥

इतिहासादिरितिवृत्तं [3]काव्यशरीरम् । तस्य कुटिलत्वं ततो दण्डनीते-[4]र्बलीयस्त्वाबलीयस्त्वादिप्रयोगो व्युत्पत्तिमूलत्वात्तस्याः । एवमन्यासामपि विद्यानां [5]यथास्वमुपयोगो वर्णनीय इति ।

[6]लक्ष्यज्ञत्वमभियोगो वृद्धसेवावेक्षणं प्रतिभानमवधानं च प्रकीर्णम् ॥ ११ ॥

तत्र काव्यपरिचयो लक्ष्यज्ञत्वम् ॥ १२ ॥

[7]अन्येषां काव्येषु परिचयो लक्ष्यज्ञत्वम् । ततो हि काव्यबन्धस्य व्युत्पत्तिर्भवति ॥

काव्यबन्धोद्यमोऽभियोगः ॥ १३ ॥

काव्यस्य बन्धनं [8]रचना काव्यबन्धः । तत्रोद्यमोऽभियोगः । स हि[9] कवित्वप्रकर्षमेव[10]संदधाति ।

काव्योपदेशगुरुशुश्रूषणं[11] वृद्धसेवा ॥ १४ ॥

काव्योपदेशे गुरव [12]उपदेष्टारः । तेषां शुश्रूषणं वृद्धसेवा । ततः [13]काव्यविद्यायाः संक्रान्तिर्भवति ।

[14]पदाधानोद्धरणमवेक्षणम् ॥ १५ ॥

पदस्याधानं न्यासः । उद्धरणम[15]पसारणम् । [16]तयोः खल्ववेक्षणम् ।

अत्र श्लोकौ—

'आधानोद्धरणे तावद्यावद्दोलायते मनः ।
पदस्य [17]स्थापिते स्थैर्ये हन्त सिद्धा सरस्वती ॥

---

१. काव्येषु निबद्धुं शक्यमिति. २. 'ततः इतिहासादि' क. ३. 'काव्यार्थ' ख. ४. 'राबलीयसादिप्रयोगव्युत्पत्ति' क. ५. 'यथायथं' ख. ६. ख-पुस्तके एतत्सूत्रं पूर्वसूत्रान्तर्गतमेव स्थापितम्. ७. 'अन्येषु' क. ८. 'रचना काव्यबन्धः' इति ख-पुस्तके नास्ति. ९. क-पुस्तके नास्ति. १०. 'आराधयति' क. ११. 'शुश्रूषणं च' क. १२. क-पुस्तके नास्ति. १३. 'काव्यच्छाया संक्रामति' क. १४. 'पदाधानोद्धरणे चावेक्षणम्' ख. १५. 'अपसारः' क. १६. 'तत्' क. १७. 'आस्थापिते' ख.

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते ॥'

**कवित्वबीजं प्रतिभानम् ॥ १६ ॥**

कवित्वस्य बीजं कवित्वबीजं जन्मान्तरागत[1]संस्कारविशेषः कश्चित्। यस्माद्[2]बीजं विना काव्यं न निष्पद्यते। निष्पन्नं [3]वावहास्यायतनं स्यात्।

**चित्तैकाग्र्यमवधानम् ॥ १७ ॥**

[4]चित्तस्यैकाग्र्यं बाह्यार्थनिवृत्तिः। तदवधानम्। अवहितं हि चित्त[5]मर्थान्पश्यति।

**तद्देशकालाभ्याम् ॥ १८ ॥**

तदवधानं दे[6]शात्कालाच्च समुत्पद्यते।

कौ पुनर्देशकालावित्याह—

**विविक्तो देशः ॥ १९ ॥**

विविक्तो निर्जनः।

**रात्रियामस्तुरीयः कालः ॥ २० ॥**

रात्रेर्यामो रात्रियामः प्रहरः। तुरीयश्चतुर्थः [7]काल इति। तद्वशाद्वि[8]षयोपरतं प्रसन्नं चित्तमवधत्ते।

एवं काव्याङ्गान्युपदर्श्य [9]काव्यविशेषकथनार्थमाह—

**काव्यं गद्यं पद्यं च ॥ २१ ॥**

गद्यस्य [10]पूर्वं निर्देशो दुर्लक्ष्यविषयत्वेन दुर्बन्धत्वात्। यथाहुः—'गद्यं कवीनां निकषं वदन्ति'।

तच्च त्रिधा भिन्नमिति दर्शयितुमाह—

**गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायं च ॥ २२ ॥**

तल्लक्षणान्याह—

**पद्यभागवद्वृत्तगन्धि ॥ २३ ॥**

---

१. 'जन्मान्तरागत' इति क-पुस्तके नास्ति. २. ख-पुस्तके नास्ति. ३. 'च हास्यायतनं' क. ४. चित्तैकाग्र्यमन्यार्थविनिवृत्तिः' ख. ५. 'अर्थान्न पतति' क. ६. 'देशकालाभ्यां संपद्यते' क. ७. ख-पुस्तके नास्ति. ८. 'विषयादुप' क. ९. 'काव्यविशेषस्य ज्ञानार्थमाह' ख. १०. 'पूर्वनिर्देशो दुर्बन्धत्वात् विषयत्वेन दुर्बोधत्वात्' ख.

पद्यस्य भागाः पद्यभागास्तद्वद्वृत्तगन्धि ।

यथा—'पातालतालुतलवासिषु दानवेषु' इति ।

अत्र हि वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते ।

**अनाविद्धललितपदं चूर्णम् ॥ २४ ॥**

अनाविद्धान्यदीर्घसमासानि ललितान्यनुद्धतानि पदानि यस्मिंस्तदनाविद्धललितपदं चूर्णमिति ।

यथा—'अभ्यासो हि कर्मणां कौशलमावहति । नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति' ।

**विपरीतमुत्कलिकाप्रायम् ॥ २५ ॥**

विपरीतमाविद्धोद्धतपदमुत्कलिकाप्रायम् ।

यथा—'कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इति ।

**पद्यमनेकभेदम् ॥ २६ ॥**

पद्यं खल्वनेकेन समार्धसमविषमादिना भेदेन भिन्नं भवति ।

**तदनिबद्धं निबद्धं च ॥ २७ ॥**

तदिदं गद्यपद्यरूपं काव्यमनिबद्धं निबद्धं च । अनयोः प्रसिद्धत्वाल्लक्षणं नोक्तम् ।

**क्रमसिद्धिस्तयोः स्रगुत्तंसवत् ॥ २८ ॥**

तयोरित्यनिबद्धं निबद्धं च परामृश्यते । क्रमेण सिद्धिः क्रमसिद्धिः । अनिबद्धसिद्धौ निबद्धसिद्धिः स्रगुत्तंसवत् । यथा स्रजि मालायां सिद्धायामुत्तंसः शेखरः सिध्यतीति ।

केचिदनिबद्ध एव पर्यवसितास्तद्दूषणार्थमाह—

**नानिबद्धं चकास्त्येकतेजः परमाणुवत् ॥ २९ ॥**

न खल्वनिबद्धं काव्यं चकास्ति दीप्यते । यथैकतेजः परमाणुरिति[6] ।

---

१. 'निपतितमात्रेण' क. २. 'भार' क-पुस्तके नास्ति. ३. 'भेदेनोपेतमिति' क. ४. ख-पुस्तके नास्ति. ५. 'स्रग्दूषणार्थं' ख. ६. 'इवेति' ख.

अत्र श्लोकः—

'असंकलितरूपाणां काव्यानां नास्ति चारुता ।
न प्रत्येकं प्रकाशन्ते तैजसाः परमाणवः ॥'

**संदर्भेषु दशरूपकं श्रेयः ॥ ३० ॥**

संदर्भेषु प्रबन्धेषु दशरूपकं नाटकादि श्रेयः ।

कस्मात्[1]तदाह—

**त[2]द्धि चित्रं चित्रपटवद्विशेषसाकल्यात् ॥ ३१ ॥**

तद्दशरूपकं हि यस्माच्चित्रं चित्रपटवत् । विशेषाणां साकल्यात् ।

**ततोऽन्यभेदक्लृप्तिः ॥ ३२ ॥**

ततो दशरूपकादन्येषां भेदानां क्लृप्तिः कल्पनमिति । द[3]शरूपकस्यैव हीदं सर्वं विलसितम् । य[4]च्च कथाख्यायिके महाकाव्यमिति । तल्लक्षणं च[5] नातीव हृदयंगममित्युपेक्षितमस्माभिः । त[6]दन्यतो ग्राह्यम् ।

इति काव्यालंकारसूत्रवृत्तौ शारीरे प्रथमेऽधिकरणे तृतीयोऽध्यायः ।

काव्याङ्गानि काव्यविशेषाश्च[7] ।

**समाप्तं चेदं शारीरं प्र[8]थममधिकरणम् ।**

---

## दोषदर्शनं नाम द्वितीयमधिकरणम् ।

### प्रथमोऽध्यायः ।

काव्यशरीरे स्थापिते काव्यसौन्दर्याक्षेपहेतवस्त्यागा दोषा विज्ञा[9]तव्या इति दोषदर्शनं ना[10]माधिकरणमारभ्यते ।

दोषस्वरूपकथनार्थमाह—

**गुणविपर्ययात्मानो दोषाः ॥ १ ॥**

गुणानां वक्ष्यमाणानां ये विपर्ययास्तदात्मानो दोषाः ।

**अर्थतस्तदवगमः ॥ २ ॥**

गुणस्वरूपनिरूपणात्तेषां दोषाणामर्थादवगमोऽर्थसिद्धिः ।

---

१. 'तदाह' क-पुस्तके नास्ति. २. 'तद्धिचित्रं' ख. ३. 'दशरूपकमेव' क. ४. 'युद्वत' क. ५. क-पुस्तके नास्ति. ६. 'तदन्यद्ग्राह्यम्' ख. ७. 'च' क-पुस्तके नास्ति. ८. 'प्रथमं' क-पुस्तके नास्ति. ९. 'ज्ञातव्या' ख. १०. 'नाम' क-पुस्तके नास्ति.

किमर्थं ते पृथक्प्रपञ्चयन्त इत्याह—

**सौकर्याय प्रपञ्चः ॥ ३ ॥**

सौकर्यार्थं प्रपञ्चो वि[1]स्तरो दोषाणाम् । उद्दिष्टलक्षणा हि दोषाः सुज्ञाता भवन्ति ।

पददोषान्दर्शयितुमाह—

**दुष्टं पदमसाधु कष्टं ग्राम्यमप्रतीतमनर्थकं च ॥ ४ ॥**

क्रमेण व्याख्यातुमाह—

**शब्दस्मृतिविरुद्धमसाधु ॥ ५ ॥**

शब्दस्मृत्या व्याकरणेन विरुद्धं प[2]दमसाधु । यथा—'अन्यकारकवैयर्थ्यम्' इति । अत्र हि[3] 'अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति दुं[4]का भवितव्यमिति ।

**श्रु[5]तिविरसं कष्टम् ॥ ६ ॥**

श्रुतिविरसं श्रोत्रकटुपदं कष्टम् । त[6]द्धि रचनागुम्फितमप्युद्वेजयति । यथा—

'अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग्विशदः शशाङ्कः ।'

**लोकमात्रप्रयुक्तं ग्राम्यम् ॥ ७ ॥**

लोक एव य[7]त्प्रयुक्तं पदं न शास्त्रे तद्ग्राम्यम् । यथा—'कष्टं कथं रोदिति फूत्कृतेयम्' । अन्यदपि त[8]ल्लगल्लादिकं द्रष्टव्यम् ।

**शास्त्रमात्रप्रयुक्तमप्रतीतम् ॥ ८ ॥**

शास्त्र एव प्रयुक्तं यन्न लोके तदप्रतीतं प[9]दम् । यथा—

> 'किं भाषितेन बहुना रू[10]पस्कन्धस्य सन्ति मे न गुणाः ।
> गु[11]णानन्तरीयकं च प्रेमेति न मेऽ[12]स्त्युपालम्भः ॥'

---

१. 'विस्तरो' क-पुस्तके नास्ति. २. 'असाधुपदम्' क. ३. 'हि' क-पुस्तके नास्ति. ४. 'अन्यः कारकः' इति विग्रहे दुगागमो भवति. तेन 'अन्यत्कारकवैयर्थ्यम्' इति साधु. ५. क-पुस्तके सूत्रमेतत्त्रुटितम्. ६. 'तद्विरचनात्' क. ७. प्रयुक्तं यन्न शास्त्रे तद्ग्राम्यं पदम्. ८. 'भल्ल' क. तल्लशब्दस्तडागवाचकः. ९. 'पदम्' क-पुस्तके नास्ति. १०. इन्द्रियपञ्चकस्य. ११. 'गुणनान्तरीयकं च' क. १२. 'ऽस्तुऽपालम्भः' ख.

अत्र रूपस्कन्धान्तरीयकौ न लोक इत्यप्रतीतम् ।

**पूरणार्थमनर्थकम् ॥ ९ ॥**

पूरणमात्रप्रयोजनमव्ययपदमनर्थकम् । दण्डापूपन्यायेन पदमन्यदप्यनर्थकमेव[1] । यथा—

'उदितस्तु हास्तिकविनीलमयं तिमिरं निपीय किरणैः सविता ।'

अत्र[2] तुशब्दस्य पादपूरणार्थमेव प्रयोगः, न वाक्यालंकारार्थम् । वाक्यालंकारप्रयोजनं तु नानर्थकम्[3] । अपवादार्थमिदम् । यथा—

'न खल्विह गतागता नयनगोचरं मे गता' इति ।

तथा[4] हि खलु हन्तेति ।

संप्रति पदार्थदोषानाह[5]—

**अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि[6] च ॥ १० ॥**

दुष्टं[7] पदमित्यनुवर्तते । अर्थतश्च[8] वचनविपरिणामः । अन्यार्थादीनि[9] पदानि दुष्टानीति सूत्रार्थः ।

एषां क्रमेण लक्षणान्याह—

**रूढिच्युतमन्यार्थम् ॥ ११ ॥**

रूढिषु[10] च्युतं रूढिमनपेक्ष्य यौगिकार्थमात्रोपादानादन्यार्थं पदम् । स्थूलत्वात्सामान्येन घटशब्दः पटशब्दार्थ इत्यादिकमन्यार्थं नोक्तम् । यथा—

'ते दुःखमुच्चावचमावहन्ति ये प्रसरन्ति प्रियसंगमानाम् ।'

अत्रावहतिः करोत्यर्थो धारणार्थे प्रयुक्तः, प्रसरतिर्विस्मरणार्थः प्रकृष्टसरण इति ।

**कल्पितार्थं नेयार्थम् ॥ १२ ॥**

---

१. 'एव' क-पुस्तके नास्ति. २. क-पुस्तके नास्ति. ३. 'नारञ्जकम्' क. ४. तथेत्यादिका पङ्क्तिः क-पुस्तके नास्ति. ५. 'दोषं' क. ६. 'क्लिष्टानि' क. ७. 'पदं दुष्टं' क. ८. 'अर्थाच्च विभक्तिविपरिणामः' क; 'अर्थतश्च वचनं परिणाःम' ख. ९. 'अन्यार्थनेयानेयादीनि' ख. १०. 'रूढिच्युतं' ख.

अश्रुतस्याप्यन्यस्य[1] पदार्थस्य कल्पनात्कल्पितार्थं नेयार्थम् । यथा—

'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ॥'

अत्र विहंगमश्चक्रवाकोऽभिप्रेतः । तन्नामानि चक्राणि । तानि[2] बिभ्रतीति विहंगमनामभृतो रथाः । पङ्क्तिरिति दशसंख्या लक्ष्यते । पङ्क्तिर्दश विहंगमनामभृतो रथा[3] यस्य स पङ्क्तिविहंगमनामभृद्दशरथः । तस्य तनयाभ्यां रामलक्ष्मणाभ्यां संवलितं प्लवगसैन्यं जितम् । उलूकजिता इन्द्रजिता । कौशिकशब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्तः । ननु चैवं रथाङ्ग[4]नामादीनामपि प्रयोगोऽनुपपन्नः । न । तेषां निरूढ[5]लक्षणत्वात् ।

**अप्रसिद्धार्थप्रयुक्तं गूढार्थम् ॥ १३ ॥**

यस्य पदस्य[6] लोकेऽर्थः प्रसिद्धश्चाप्रसिद्धश्च तदप्रसिद्धे[7]ऽर्थे प्रयुक्तं गूढार्थम् ।

यथा—

'सहस्रगोरिवानीकं दुःसहं भवतः परैः' इति ।

सहस्रं गावोऽक्षीणि यस्य स सहस्रगुरिन्द्रः । तस्येवेति गोशब्दस्याक्षिर्वाचित्वं[8] कविष्व[9]प्रसिद्धमिति[10] ।

**असभ्यार्थान्तरमसभ्यस्मृति[11]हेतुश्चाश्लीलम् ॥ १४ ॥**

यस्य पदस्यानेकार्थस्यैकोऽर्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम् ।

यथा—'वर्चः' इति पदं तेजसि विष्ठायां च ।

यत्तु पदमेकदेशद्वारेणासभ्यार्थं स्मारयति तदसभ्यस्मृतिहेतुः ।

यथा—'कृकाटिका' इति ।

---

१ 'अश्रुतार्थस्य कल्पना कल्पितार्थं' ख. २. 'तानि' ख-पुस्तके नास्ति. ३. 'रथा' क-पुस्तके नास्ति. ४. 'रथाङ्गनामप्रयोगो' ख. ५. 'रूढ' ख. ६. 'पदस्य' ख-पुस्तके नास्ति. ७. 'प्रसिद्धार्थे' ख. ८. 'वाचकत्वात्' ख. ९. 'कविषु' क-पुस्तके नास्ति. १०. 'इति' ख-पुस्तके नास्ति. ११. 'स्मृतिकरमश्लीलम्' क.

**न गुप्तलक्षितसंवृतानि ॥ १५ ॥**

अपवादार्थमिदम् । गुप्तं लक्षितं संवृतं च नाश्लीलम् ।

एषां लक्षणान्याह—

**अप्रसिद्धासभ्यं गुप्तम् ॥ १६ ॥**

अप्रसिद्धासभ्यार्थान्तरं पदमप्रसिद्धासभ्यम् । तद्गुप्तम् ।

यथा—'संबाधः' इति पदम् । तद्धि संकटार्थं प्रसिद्धम्, न गुह्यार्थमि

**लाक्षणिकासभ्यान्वितं लक्षितम् ॥ १७ ॥**

तदेवासभ्यार्थान्तरं लाक्षणिकेनासभ्येनार्थेनान्वितं पदं लक्षितम् । यथा—'जन्मभूमिः' इति ।

तद्धि लक्षणया गुह्यार्थम्, न स्वशक्त्येति ।

**लोकसंवीतं संवृतम् ॥ १८ ॥**

लोकेन संवीतं लोकसंवीतं यत्तत्संवृतम् । यथा—'सुभगा' 'भगि 'उपस्थानम्' 'अभिप्रेतम्' 'कुमारी' 'दोहदम्' इति ।

अत्र हि श्लोकः—

'संवीतस्य हि लोकेन न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावना ॥'

**तत्त्रैविध्यम् । व्रीडाजुगुप्सामङ्गलातङ्कदायिभेदात् ॥ १९ ॥**

तस्याश्लीलस्य त्रैविध्यं भवति । व्रीडाजुगुप्सामङ्गलातङ्कदायि भेदात् । किंचिद्व्रीडादायि भवति । यथा—'वाक्चाटवम्' 'हिरण्यरेत इति । किंचिज्जुगुप्सादायि भवति । यथा—'कपर्दकः' इति । किंचिदम लातङ्कदायि भवति । यथा—'संस्थितः' इति ।

**व्यवहितार्थप्रत्ययं क्लिष्टम् ॥ २० ॥**

---

१. 'संवृत्तं लक्षितं ना' क. २. 'गुप्तं पदं—यथा' ख. ३. 'प्रसिद्धसंकटार्थम्' ४. 'लाक्षणिकासभ्यं' क. ५. सभ्यार्थान्तरलाक्ष–' ख. ६. 'लोकसंवीतमनुज्ञातं सं तम् । यथा' क. ७. 'हि' ख-पुस्तके नास्ति. ८. 'कृतम्' क. ९. 'भवति' क-पुस्त नास्ति. १० 'संस्थितम्' ख.

अर्थस्य प्रतीतिरर्थप्रत्ययः । स व्यवहितो यस्माद्भवति तदव्यवहितार्थप्रत्ययं क्लिष्टम् । यथा—

'दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥'

दक्षात्मजास्ताराः । तासां दयितो दक्षात्मजादयितश्चन्द्रः । तस्य वल्लभाश्चन्द्रकान्ताः । तद्वेदिकानामिति । अत्र हि व्यवधानेनार्थप्रत्ययः ।

**अरूढार्थत्वात् ॥ २१ ॥**

अरूढार्थत्वेऽपि यतोऽर्थप्रत्ययो झटिति न, तत्क्लिष्टम् । यथा—

'काञ्चीगुणस्थानमनिन्दितायाः' इति ।

**अन्त्याभ्यां वाक्यं व्याख्यातम् ॥ २२ ॥**

अश्लीलं क्लिष्टं चेत्यन्त्ये[1] पदे । ताभ्यां वाक्यं व्याख्यातम् । तदप्यश्लीलं क्लिष्टं च भवति । अश्लीलं यथा—

'न सा धनोन्नतिर्या स्यात्कलत्रसुख[2]दायिनी ।'
'परार्थबद्धकक्षाणां यत्सत्यं पेलवं धनम् ॥'
'सोपानपथमुत्सृज्य वायुवेगसमुद्धतम्[3] ।
महापथेन गतवान्कीर्त्यमानगुणो जनैः ॥'

क्लिष्टं यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

एतान्पञ्च[4] पदार्थदोषान्विभक्ताञ्ज्ञात्वा कविस्त्यजेदिति तात्पर्यार्थः ।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे प्रथमोऽध्यायः ।
पदपदार्थदोषविभागः ।

---

१. 'च अन्त्ये' ख. २. 'रतिदायिनी' क-ग. ३. 'समुद्धतः' क-ग. ४. 'पदपदार्थ' क; 'एतान्यपि च पदपदार्थ' ग.

द्वितीयोऽध्यायः।

इदानीं[1] वाक्यदोषान्दर्शयितुमाह—

**भिन्नवृत्तयतिभ्रष्टविसंधीनि वाक्यानि ॥ १ ॥**

दुष्टानीत्य[2]भिसंबन्धः।

क्रमेण व्याचष्टे—

**स्वलक्षणच्युतवृत्तं भिन्नवृत्तम् ॥ २ ॥**

स्वस्माल्लक्षणाच्युतं वृत्तं यस्मिंस्तत्स्वलक्षणच्युतवृत्तं वाक्यं भिन्नवृत्तम्। यथा—'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्।' वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धम्। तच्च कृतमिति भिन्नवृत्तत्वम्।

**विरसविरामं यतिभ्रष्टम् ॥ ३ ॥**

विरसः श्रुतिकटुर्विरामो यस्मिंस्तद्विरसविरामं यतिभ्रष्टम्।

**तद्धातुनामभागभेदे स्वरसंध्यकृते प्रायेण ॥ ४ ॥**

तद्यतिभ्रष्टं धातुभागभेदे नामभागभेदे च सति भवति। स्वरसंधिनाऽकृते प्रायेण बाहुल्येन। धातुभागभेदे [3]मन्दाक्रान्तायां यथा—'एतासां राजति सुमनसां दाम कण्ठावलम्बि।'

नामभागभेदे शि[4]खरिण्यां यथा—'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः।'

म[5]न्दाक्रान्तायां यथा—'दुर्दर्शश्चक्रशिखिकपिशः शार्ङ्गिणो बाहुदण्डः।'

धातुनामभागपदग्रहणात्तद्भागातिरिक्तभेदे न भवति यतिभ्रष्टत्वम्। यथा [6]मन्दाक्रान्तायाम्—'शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः[7]।'

शि[8]खरिण्यां यथा—'विनिद्रः श्यामान्तेष्वधरपुटसीत्[9]कारविरुतैः।'

---

१. 'पदपदार्थदोषान्प्रतिपाद्य इदानीं–' क. २. 'इति संबन्धः' ग. ३. 'मन्दाक्रान्तायां' क-ग-पुस्तकयोर्नास्ति. ४. 'यथा शिखरिण्याम्' ग. ५. 'मन्दाक्रान्तायां' क-ग-पुस्तकयोर्नास्ति. ६. 'मन्दाक्रान्तायां यथा' क-पुस्तके नास्ति. ७. अस्मादग्रे ख-पुस्तके "अन्ये तु पदान्त एव प्रतिसिध्यन्ति पदं च विभक्त्यन्तम्। यथा—'निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी। अवस्थामापन्ना मदनदहनोद्दामविधुरा प्रियं नः कल्याणी रमयति मनः कम्पयति च ॥" इत्यधिकमस्ति. ८. 'शिखरिण्यां यथा' क-पुस्तके नास्ति. ९. 'चीत्कार' क-ग.

स्वरसंध्यकृत इति वचनात्स्वरसंधिकृते भेदे न दोषः । यथा—'किंचिद्भावालसमसरलं प्रेक्षितं सुन्दरीणाम् ।'

**न वृत्तदोषात्पृथग्यतिदोषः । वृत्तस्य यत्यात्मकत्वात् ॥ ५ ॥**

वृत्तदोषात्पृथग्यतिदोषो न वक्तव्यः । वृत्तस्य यत्यात्मकत्वात् ।

यत्यात्मकं हि वृत्तमिति भिन्नवृत्त एव यतिभ्रष्टस्यान्तर्भावान्न पृथग्ग्रहणं कार्यमत आह—

**न, लक्ष्मणः पृथक्त्वात् ॥ ६ ॥**

नायं दोषः । लक्ष्मणो लक्षणस्य पृथक्त्वात् । अन्[1]यद्धि लक्षणं वृत्तस्य, अन्यद्यतेः । गुरुलघुनि[2]यमात्मकं वृत्तम् । विरामात्मिका च[3] यतिरिति ।

**विरूपपदसंधिर्विसंधिः ॥ ७ ॥**

पदानां संधिः पदसंधिः । स च स्वरसमवायरूपः प्रत्यासत्तिमात्ररूपो वा स विरूपो यस्मिन्निति विग्रहः ।

**पदसंधिवैरूप्यं विश्लेषोऽश्लीलत्वं कष्टत्वं च ॥ ८ ॥**

विश्लेषो विभागेन पदानां संस्थितिरिति[4] । अश्लीलत्वमसभ्यस्मृतिहेतुत्वम् । कष्टत्वं पारुष्यमिति । विश्लेषो यथा—

'मेघानिलेन अमुना एतस्मिन्नद्रिकानने ।'

'कमले इव लोचने इमे अनुबध्नाति विलासप[5]द्धतिः ।'

'लोलालकानुबद्धानि आननानि चकासति ।'

अ[6]श्लीलत्वं यथा—

'विरेचकमिदं नृ[7]त्तमाचार्याभासयोजितम् ।'

'चकासे पनसप्रायैः पुरी [8]षण्डमहाद्रुमैः ।'

'वि[9]नाशपथदानाभ्यां पदवादसमुत्सुकम् ।'

कष्टत्वं यथा—'मञ्जर्युद्गमगर्भास्ते गुं[10]र्वाभोगा द्रुमा बभुः ।'

---

१. 'विलक्षणं' क-ख. २. 'नियामकं' ख. ३. 'च' ग-पुस्तके नास्ति. ४. 'इति' ग-पुस्तके नास्ति. ५. 'पद्धतिम्' क. ६. 'अश्लीलं च' क; 'अश्लीलं' ग. ७. 'वृत्तमाचार्याभ्यास-' ख. ८. 'खण्ड' क-ग. ९. 'विनाशपथदीनायां यदवादयदुत्सुकम्' क; 'विनाशपथदानायदधारयदुत्सुकम्' ग. १०. 'गुरुभोगा' क.

एवं वाक्यदोषानभिधाय वाक्यार्थदोषान्[1]प्रतिपादयितुमाह—

**व्यर्थैकार्थसंदिग्धा[2]प्रयुक्तापक्रमलोकविद्याविरु[3]द्धानि च[4] ॥ ९ ॥**

वाक्यानि दुष्टानीति संबन्धः ।

क्रमेण व्याख्यातुमाह—

**व्याहतपूर्वोत्तरार्थं व्यर्थम् ॥ १० ॥**

व्याहतौ पू[5]र्वोत्तरावर्थौ यस्मिंस्तद्व्याहतपूर्वोत्तरार्थं वा[6]क्यं व्यर्थम् । यथा—'अद्यापि स्मरति र[7]सालसं मनो मे मुग्धायाः स्मरचतुराणि चेष्टितानि ।' मु[8]ग्धायाः कथं स्मरचतुराणि चेष्टितानि । तानि चेत्कथं मुग्धा । अ[9]त्र पूर्वोत्तरयोरर्थयोर्विरोधाद्व्यर्थमिति ।

**उक्तार्थपदमेकार्थम् ॥ ११ ॥**

उक्तार्थानि पदानि यस्मिंस्तदुक्तार्थपदमेकार्थम् । यथा—'चिन्तामोहमनङ्गमङ्ग तनुते [10]विप्रेक्षितं सुभ्रुवः ।' अनङ्गः शृङ्गारः । तस्य चि[11]न्ताया मोहात्मकत्वाच्चिन्तामोहशब्दौ प्रयुक्तावुक्तार्थौ भवतः । एकार्थपदत्वाद्वाक्यमेकार्थमित्युक्तम् ।

**न, विशेषश्चेत् ॥ १२ ॥**

न गतार्थं दु[12]ष्टम् विशेषश्चेत्प्रतिपाद्यः स्यात् ।

तं विशेषं प्रतिपादयितुमाह—

**धनुर्ज्याध्वनौ ध[13]नुःश्रुतिरारूढेः प्रतिपत्त्यै ॥ १३ ॥**

धनुर्ज्याध्वनावित्यत्र ज्याशब्देनोक्तार्थत्वेऽपि धनुःश्रुतिः प्रयुज्यते । आरूढेः प्रतिपत्त्यै आरोहणस्य प्रतिपत्त्यर्थम् । नहि धनुःश्रुतिमन्तरेण धनुष्यारूढा ज्या धनुर्ज्येति शक्यं प्रतिपत्तुम् । यथा—'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव' इति ।

---

१. 'निरूपयितुं' क. २. 'प्रयुक्तार्थापक्रम' ग. ३. 'विरुद्धाविरुद्धानि' ग. ४. 'च' ख-पुस्तके नास्ति. ५. 'पूर्वोत्तरार्थौ' ख. ६. 'वाक्यं' क-ग-पुस्तकयोर्नास्ति. ७. 'रसोल्लसत्' ख. ८. 'मुग्धा चेत्' ग. ९. 'अत्र' क-ख-पुस्तकयोर्नास्ति. १० 'विश्लेषितं' ख. ११. 'चिन्तामोहाद्यात्मकत्वात्' क; 'चिन्तामोहात्मकत्वात्' ग. १२. 'दुष्टं पदं' ख. १३. 'धनुःप्रतीतिरारूढे प्रतिपत्तौ' क.

**कर्णावतंसश्रवणकुण्डलशिरःशेखरेषु कर्णादिनिर्देशः संनिधेः १४**

कर्णावतंसादिशब्देषु कर्णादीनामवतंसादिपदैरुक्तार्थानाम[1]पि निर्देशः संनिधेः प्रतिपत्त्यर्थमिति संबन्धः । नहि कर्णादिशब्दनिर्देशमन्तरेण कर्णादिसंनिहितानामवतंसादीनां शक्या प्रतिपत्तिः कर्तु[2]मिति । यथा—'दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ।'

'लीलाचलच्छ्रवणकुण्डलमापतन्ति ।'
'आययुर्भृङ्गमु[3]खरशिरःशेखरशा[4]लिनः ।'

**मुक्ताहारशब्दे मुक्ताशब्दः शुद्धेः ॥ १५ ॥**

मुक्ताहारशब्दे मुक्ताशब्दो हारशब्देनैव गतार्थः प्रयुज्यते शुद्धेः प्रतिपत्त्यर्थमिति संबन्धः । शुद्धानामन्यरत्नै[5]रमिश्रितानां हारो मुक्ताहारः । यथा—

'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्त[6]नद्वयम् ॥'

**पुष्पमालाशब्दे पु[7]ष्पपदमुत्कर्षस्य ॥ १६ ॥**

पुष्पमालाशब्दे मालाशब्देनैव गतार्थे पुष्पपदं प्रयुज्यते उत्कर्षस्य प्रतिपत्त्यर्थमिति । उत्कृष्टानां पुष्पाणां माला पुष्पमालेति । यथा—'प्रायशः पुष्पमालेव क[8]न्या सा कं न लोभयेत् ।' ननु मालाशब्दोऽन्यत्रापि दृश्यते यथा रत्नमाला शब्दमालेति सत्यम् । उपचरितस्य प्रयोगः । निरुपपदो हि मालाशब्दः पु[9]ष्परचनाविशेषमेवा[10]भिधत्त इति ।

**करिकलभशब्दे करिशब्दस्ता[11]द्रूप्यस्य ॥ १७ ॥**

करिकलभशब्दे करिशब्दः कलभेनैव गतार्थः प्रयुज्यते ताद्रूप्यस्य

१. 'अपि' ख-ग-पुस्तकयोर्नास्ति. २. 'कर्तुमिति' ख-ग-पुस्तकयोर्नास्ति. ३. 'मुखराः' ख-ग. ४. 'शायिनः' ग. ५. 'अमिश्राणां' क. ६. 'स्तनद्वयी' क. ७. 'पुष्पशब्दः' क. ८. 'कन्यका कं' ख-ग. ९. 'पुष्पमालारचना' ख. १०. 'एव' ख-ग-पुस्तकयोर्नास्ति. ११. 'ताद्रूप्यस्य प्रतिपत्त्यर्थम्' ख.

प्रतिपत्त्यर्थमिति। करी प्रौढकुञ्जरः[1]। तद्रूपः कलभः करिकलभ इति। यथा—'त्यज करिकलभ त्वं प्रीतिबन्धं करिण्याः।'

**विशेषणस्य च ॥ १८ ॥**

विशेषणस्य विशेषप्रतिपत्त्यर्थमुक्तार्थस्य पदस्य[3] प्रयोगः। यथा—

'जगाद मधुरां वाचं विशदाक्षरशालिनीम्[4]।'

**तदिदं प्रयुक्तेषु ॥ १९ ॥**

तदिदमुक्तं प्रयुक्तेषु नाप्रयुक्ते। नहि भवति यथा 'श्रवणकुण्डलम्' इति तथा 'नितम्बकाञ्ची' इत्यपि। यथा वा[5] 'करिकलभः' इति तथा 'उष्ट्रकलभः' इत्यपि।

अत्र श्लोकः—

'कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः।
संनिधानादिबोधार्थं स्थितेष्वेतत्समर्थनम्॥'

**संशयकृत्संदिग्धम् ॥ २० ॥**

यद्वाक्यं साधारणानां धर्माणां श्रुतेः, विशिष्टानां वा[6] श्रुतेः संशयं करोति तत्संशयकृत्संदिग्धमिति[7]।

यथा—'स महात्मा भाग्यवशान्महापदमुपागतः।'

किं भाग्यवशान्महापदमुपागत आहोस्विदभाग्यवशान्महतीमापदमिति[8] संशयकृद्वाक्यं प्रकरणाद्यभावे सतीति[9]।

**मायादिकल्पितार्थमप्रयुक्तम् ॥ २१ ॥**

मायादिना कल्पितोऽर्थो यस्मिंस्तन्मायादिकल्पितार्थमप्रयुक्तम्। अत्र [10]स्तोकमुदाहरणम्।

**क्रमहीनार्थमपक्रमम् ॥ २२ ॥**

---

१. 'करिणः प्रौढकुञ्जराः' क. २. 'इति' क-पुस्तके नास्ति. ३. 'शब्दस्य' क. ४. 'मालिनीम्' क. ५. 'वा' ख-पुस्तके नास्ति. ६. 'चाश्रुतेः' क; 'च श्रुतेः' ग. ७. 'इति' ख-पुस्तके नास्ति. ८. 'आपदमुपागत' इति क. ९. 'इति' ग-पुस्तके नास्ति. १०. 'अस्तोकं' क; 'श्लोकं' ग.

[1]उद्देशितानामनुद्देशितानां च क्रमः संबन्धस्तेन [2]विहीनोऽर्थो यस्मिंस्तत्क्रमहीनार्थमपक्रमम् ।

यथा—'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ ।'

[3]अत्र कीर्तिश्चन्द्रमसस्तुल्या प्रतापः सूर्यस्य तुल्यः । सूर्यस्य पूर्वनिपातादपक्रमः । अथवा प्रधानार्थस्य निर्देशः क्रमः । तेन विहीनोऽर्थो यस्मिंस्तदपक्रमम् ।

यथा—'तुरंगमथ मातङ्गं [4]प्रयच्छास्मै मदालसम् ।'

**देशकालस्वभावविरुद्धार्थानि लोकविरुद्धानि ॥ २३ ॥**

देशकालस्वभावैर्विरुद्धोऽर्थो येषु तानि देशकालस्वभावविरुद्धार्थानि वाक्यानि लोकविरुद्धानि । अर्थद्वारेण लोकविरुद्धत्वं [5]वाक्यानाम् । देशविरुद्धं यथा—

'सौवीरेष्वस्ति नगरी मथुरा नाम विश्रुता ।
अक्षोट[6]नालिकेराढ्या यस्याः पर्यन्तभूमयः ॥'

कालवि[7]रुद्धं यथा—'कदम्बकुसुमस्मेरं मधौ वनमशोभत ।'

स्वभाववि[8]रुद्धं यथा—'मत्तालिसङ्गमुखरासु च मञ्जरीषु सप्तच्छदस्य तरतीव शरन्मुखश्रीः ।'

सप्तच्छदस्य स्तबका भवन्ति न मञ्जर्य [9]इति स्वभावविरुद्धम् ।
तथा—

'भृङ्गेण कलिकाकोषस्तथा [10]भृशमपीड्यत ।
यथा गोष्पदपूरं हि ववर्ष बहुलं मधु ॥'

[11]कलिकायाः सर्वस्या मकरन्दस्यैतावद्बाहुल्यं स्वभावविरुद्धम् ।

---

१. 'उद्देशिनामनुद्देशिनां' क. २. 'हीनो' क. ३. 'अत्र' इत्यारभ्य 'अपक्रमः' इतिपर्यन्तं क-पुस्तके, 'अत्र' इत्यारभ्य 'यथा' इतिपर्यन्तं च ग-पुस्तके नास्ति. ४. 'मे प्रयच्छ' ग. ५. 'विरुद्धार्थत्वं' क. ६. 'नालिकेराङ्का' क; 'नालिकेराद्या' ख. ७. 'विरुद्धार्थं' क. ८. 'विरुद्धार्थं' क. ९. 'इति स्वभावविरोधः । यथा' क; 'इति । स्वभावविरुद्धं यथा ।' ख. १०. 'संधावपीड्यत' क. ११. 'कलिकाकोषस्य मकरन्दस्यैव तावत्' क.

कलाचतुर्वर्गशास्त्रविरुद्धार्थानि विद्याविरुद्धानि ॥ २४ ॥

कलाशास्त्रैश्चतुर्वर्गशास्त्रैश्च विरुद्धोऽर्थो येषु तानि कलाचतुर्वर्गशास्त्रविरुद्धार्थानि वाक्यानि विद्याविरुद्धानि । वाक्यानां विरोधोऽर्थद्वारकः ।

कलाशास्त्रविरुद्धं यथा—'कालिङ्गं लिखितमिदं वयस्य पत्रं पत्रज्ञैरपतितकोटिकण्टकाग्रम्' ।

कालिङ्गं पतिताग्रकोटिकण्टकमिति पत्रविदामाम्नायः । तद्विरुद्धत्वात्कलाशास्त्रविरुद्धम् । एवं कलान्तरेष्वपि विरोधोऽभ्यूह्यः ।

चतुर्वर्गशास्त्रविरुद्धानि तूदाह्रियन्ते—'कामोपभोगसाफल्यफलो राज्ञां महीजयः ।'

धर्मफलोऽश्वमेधादियज्ञफलो वा राज्ञां महीजय इत्यागमः । तद्विरोधाद्धर्मशास्त्रविरुद्धार्थमेतद्वाक्यमिति ।

'अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ।'

द्विषज्जयस्य नयमूलत्वं स्थितं दण्डनीतौ । तद्विरोधादर्थशास्त्रविरुद्धार्थं वाक्यमिति ।

'दशनाङ्कपवित्रितोत्तरोष्ठं रतिखेदालसमाननं स्मरामि ।'

'उत्तरोष्ठमन्तर्मुखं नयनान्तमिति मुक्त्वा चुम्बननखरदशनस्थानानि' इति कामशास्त्रे स्थितम् । तद्विरोधात्कामशास्त्रविरुद्धार्थं वाक्यमिति ।

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदा ।'

एतस्यार्थस्य मोक्षशास्त्रे स्थितत्वात्तद्विरुद्धार्थम् ।

---

१. 'विरुद्धानि' ख. २. 'विरुद्धार्थो' ख. ३. 'कलाविरुद्धचतुर्वर्ग' ख. ४. 'विरुद्धानि विद्या–' ख. ५. 'च यस्य' ख. ६. 'कण्टकश्रि' क. ७. 'कोटि' क-पुस्तके नास्ति. ८. 'तद्विरोधात्' क. ९. विरुद्धत्वम्' क. १०. 'अत्यूह्य' ख; 'अभ्युपेयः' ग. ११. 'तु' क-पुस्तके नास्ति. १२. 'विरुद्धमेतद्वाक्यम्' क; 'विरुद्धं वाक्यम्' ग. १३. 'विरुद्धत्वम्' क; 'विरुद्धम्' ग. १४. 'वाक्यमिति' क-ग-पुस्तकयोर्नास्ति. १५. 'इति' ग-पुस्तके नास्ति. १६. 'कामशास्त्रसूत्रे' ख. १७. 'देवताज्ञानतो' ख.

एते वाक्यवाक्यार्थदोषास्त्यागाय ज्ञातव्याः। ये[1] त्वन्ये शब्दार्थ[2]दोषाः सूक्ष्मास्ते गुणविवेचन एवोच्यन्ते[3]। उपमादोषाश्चोपमाविचार[4] इति[5]।

इति काव्यालंकारसूत्रवृत्तौ दोषदर्शने द्वितीयेऽधिकरणे द्वितीयोऽध्यायः।
वाक्यवाक्यार्थदोषविभागः[6]।

समाप्तं चेदं दोषदर्शनं द्वितीयमधिकरणम्।

---

## गुणविवेचनं नाम तृतीयमधिकरणम्।

### प्रथमोऽध्यायः।

यद्विपर्ययात्मनो दोषास्तान्गुणान्विचारयितुं गुणविवेचनमधिकरणमा[7]रभ्यते—

तत्रौजःप्रसादादयो गुणाः, यमकोपमादयस्त्वलंकारा इति स्थितिः काव्यविदाम्। तेषां किं भेदनिबन्धनमित्याह—

**काव्यशोभायाः कर्तारो धर्मा[8] गुणाः ॥ १ ॥**

ये खलु शब्दार्थयोर्धर्माः[9] काव्यशोभां कुर्वन्ति ते गुणाः। ते चौजः-प्रसादादयः। न यमकोपमादयः। कैवल्येन तेषामकाव्यशोभाकरत्वात्। ओजःप्रसादादीनां तु केवलानामस्ति[10] काव्यशोभाकरत्वमिति[11]।

**तदतिशयहेतवस्त्वलंकाराः ॥ २ ॥**

तस्याः काव्यशोभाया अतिशयस्तदतिशयस्[12]तस्य हेतवः। तुशब्दो व्यतिरेके। अलंकाराश्च यमकोपमादयः।

अत्र श्लोकौ—

'युवतेरिव रूपमङ्ग काव्यं[13] स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥
'यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥'

---

१. 'अन्ये च ये' ग. २. 'शब्दार्थयोः' क. ३. 'वक्ष्यन्ते' ख. ४. 'च' ख-पुस्तके नास्ति. ५. 'इति' ख-पुस्तके नास्ति. ६. 'वाक्यशब्दार्थदोष' क. ७. 'विवेचनाधिकरणं' क. ८. 'धर्मगुणाः' ख. ९. 'शब्दार्थधर्माः' क. १०. 'अस्ति' ख-पुस्तके नास्ति. ११. 'कारित्वं' ग. १२. 'तदतिशयः' क-पुस्तके नास्ति. १३. 'वाक्यं' क.

**पूर्वे नित्याः ॥ ३ ॥**

पूर्वे[1] गुणा नित्याः। तैर्विना काव्यशोभानुपपत्तेः।

एवं गुणालंकाराणां भेदं दर्शयित्वा शब्दगुणनिरूपणार्थमाह—

**ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः ॥ ४ ॥**

बन्धः पदरचना। तस्य गुणा बन्धगुणा ओजःप्रभृतयः।

तान्क्रमेण दर्शयितुमाह—

**गाढबन्धत्वमोजः ॥ ५ ॥**

बन्धस्य गाढत्वं यत्तदोजः।

यथा—'विलुलितमकरन्दा मञ्जरीर्नर्तयन्ति[2]।' न पुनः, 'विलुलितमधुधारा[3] मञ्जरीर्लोलयन्ति।'

**शैथिल्यं प्रसादः ॥ ६ ॥**

बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः।

नन्वयमोजोविपर्ययात्मा दोषः, तत्कथं गुण इत्याह—

**गुणः संप्लवात् ॥ ७ ॥**

गुणः प्रसादः[4]। ओजसा सह संप्लवात्।

**न[5] शुद्धः ॥ ८ ॥**

स[6] शुद्धस्तु दोष एवेति।

ननु विरुद्धयोरोजःप्रसादयोः कथं संप्लव इत्याह—

**स त्वनुभवसिद्धः ॥ ९ ॥**

स तु संप्लवस्त्वनुभवसिद्धः तद्विदां रत्नादिविशेषवत्।

अत्र श्लोकः—

'करुण[7]प्रेक्षणीयेषु संप्लवः सुखदुःखयोः।
यथानुभवतः सिद्धस्तथैवोजःप्रसादयोः॥'

---

१. 'पूर्वे खलु' ख; 'पूर्वे ते' ग. २. 'नर्तयन्तः' क. ३. 'मधुधारां मञ्जरीं' ग. ४. 'प्रसादः' ख-पुस्तके नास्ति. ५. एतत्सूत्रं ख-पुस्तके वृत्तिमध्ये न्यस्तम्, क-पुस्तके च त्रुटितम्. ६. 'संशुद्धस्तु' क; 'शुद्धस्तु' ग. ७. 'करुणा' ख.

